


## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु (आ० प्र०)

संपुटः ३ ] | 15 MAY 1965 | [ क्रमाङ्कः ५



वैशाखाङ्कः ] शकवर्षः १८८७ [ मूल्यम् ४० पैसाः

# विषयसूचिका





वाणीं भजत गैर्वाणीम् !




# चल रे !

भारतबालक, भारतपालक,
भारतमूलक, चल रे !
समरे
रिपुनिकरान् परिहर रे ! ॥

कच्छोपद्रवकरणायत्तान्
तुच्छान् म्लेच्छान् मारय रे,
विच्छेदकरा विमताऽशक्तीः
प्रच्छेदय रे प्रतिभातः ॥ ॥ भारत ॥

पाकीस्थानप्रभुतायाः,
चीनस्थानकजनतायाः,
दुर्मदान्धतां दूरय रे,
धर्मेतरतां दारय रे ॥ ॥ भारत ॥

अंगुलमंगुलमवनिं अव, सम-
रांगणविहरणचटुतां दर्शय,
तुंगपराक्रमशिक्षां प्रकटय,
मंगलमालां वह रे रे ॥ ॥ भारत ॥



# गौर्गौः

चैनीयोपद्रवविद्रुता भारतभूमिः गौर्गौरिति व्याहृत्य वर्षद्वयमपि न यापितवती; तादृशोपद्रवश्च न निश्शेषप्रशमितः, न शमित एव वा अद्यापि। तत्पुत्र एव पाकीस्थानीयः तां पश्चिघातं घातयितुमुद्युक्त इति महती दुर्घटना। पाश्चात्या औत्तराहाश्च अस्मन्मित्राणि वाचासाहाय्यमात्रमदुः न क्रियया। ते च अन्तःकलहशिथिलिताः परस्परासूयां अस्मत्सहाययत्ने अर्गलयन्ति। कं वा न विश्वसेयं इतिं अजानती अस्मात्प्रभुता आकाशमेव ईक्षते। शत्रुश्च महाबलेन चैनीयेन प्रचोदितः पुरस्सरति भारतभूमिं कबलयितुम्। स न जानाति जये अपजये वा आत्मस्थितिः शून्यैव इति। ज्ञात्वा वा किं करोतु वारकः सः। अदूरदर्शितया भारतभीषणाय उत्थापितश्चीनभल्लूकः प्रद्रावयति पाकिस्थानं। स्थितौ तत्क्षणमेव आपद् भवेत्। तदुपद्रुतदिशया भारतदेशधावने च कालान्तरे सा भवेत्। अनयोः द्वयोः स्थित्योः अनिश्चितफलका उत्तरैव गतिरनुकूला इति मत्वा अगतिकतया पाकीस्थानीयः अस्मत्कच्छे करं न्यस्यतीति प्रतिभाति।

एवं पाकिस्थानस्य अभिप्रायस्तु अवगम्यते। परन्तु रष्यामेरिकयोः कार्यक्रमौ कीदृशौ इत्येव न ज्ञायते लीलयापि। अदृढानां अस्माकं उभयानुसरणं तटस्थतानिदर्शकं जवहरलालप्रसादितम्। तमेव पन्थानमनुसरामः अधुनापि वयम्।

एवं स्थिते अस्मद्देशशत्रोः स्वशत्रुसहचरस्य च पाकस्थानस्य अमेरिका युद्धसामग्रीं बहुलतया अर्पयतीति किं वा कारणं? नैव ज्ञायते। स्वशत्रुप्रतिरोधकेभ्यः अस्मभ्यं च वाङ्माधुर्यं प्रदर्शयतीति ततोपि आश्चर्यकरो विषयः। स्वदत्तायुधानां स्वसन्धिविरुद्धतया भारतोपर्येव तत्प्रयोगेपि अज्ञातवत् स्थितिः नितरां अगम्या।

एवमेव रष्यापि आत्मशत्रोः पाकस्थानस्य निरोधे सन्नद्धापि यथावाग्दानं भारताय साहाय्यं न प्रयच्छति। मिगविमानादीनां प्रदाने निर्माणशालानिर्वहणे च विलम्बते इति महत् दौर्भाग्यम्।

अन्तश्च भाषाविवादः, तीक्ष्णसमाजवादिनां दुश्चिन्तनादीनि च शिथिलयन्ति धैर्यम्। अथापि महावीराणां त्यागिनां जन्मभूमिरियं न गणयति कष्टानि। आत्मायत्तेनैव साधनजालेन शत्रुनिरोधः कर्तव्यः। आत्मरक्षणमात्रनीतिमतिलंघ्य प्रतिप्रहरणसमर्थैः अस्माभिः भाव्यम्। एतावत्पर्यन्तं आत्मरक्षणपरैः अस्माभिः बहवः भूभागाः उपेक्षिताः। तेन च शत्रुः वारं वारमिमामेव रीतिमाश्रित्य उपसर्पति अस्मद्भूमिम्। अतः तत्परिपाटीमतिक्रम्य प्रतिप्रहरणनयो यद्यवलम्ब्येत तर्हि अरेः गतिः निरुद्धा स्यात्, को वा अस्मन्मित्रम् को वा तदितर इत्यपि विज्ञातं भवेत्। तेन च भाविनि काले अस्मन्नीतिः असंदिग्धं व्याप्रियेत फलेत् च। "आपत्सु मित्रं जानीयात्"।

तद्यथातथा वास्तु। देशमातुः प्राप्तायाः आपदो निराकरणे भारतप्रजा सकलापि जागरूका सपरिकरा साग्रहा च नायकस्यादेशमपेक्षते। धनस्य जनस्य रक्तस्य प्राणस्यापि समर्पणे देशोपद्रवस्य दूरीकणे च वयमुत्सुकाः आत्मबलिदानसमयं निरीक्षामहे॥

जयतु स्वतंत्रभारतम्!



# सभाप्रवृत्तयः



२—४—६५ दिने नूतनवत्सरारम्भमहोत्सवः सभायां सम्मानितः। १०—४—६५ श्रीरामनवमीमहोत्सवः वाल्मीकिजयन्ती च श्रीमतः सि. वेंकटरमणार्यस्य अड्वकेटस्य आध्यक्ष्येण प्राचलताम्। २१—४—६५ दिने आन्ध्रप्रदेश समाचारशाखा सहायाध्यक्षाः श्री कप्पगंतुल लक्ष्मणशास्त्रिमहोदयाः सभामधिगत्य स्वभाषणेन प्राबोधयन् जनान् संस्कृताध्ययनाय। तेत्वेवमवोचन्-संस्कृतं न ह्येकस्य भारतस्य भाषा। सा अन्तर्जातीयभाषापि भवितुमर्हति। बह्वीनां पाश्चात्यभाषाणामपि मूलरूपाणि अत्रैव लभ्यन्ते। अत्र भाषायामेव वाचकस्य वाच्यस्य सार्थकः सम्बन्धः द्योतते, पदानि च सर्वाणि सार्थकानि भवन्ति। अतः एतद्भाषाभ्यासेन सकलवस्तुतत्वावगतिरपि सुलभा। अमेरिकाशर्मण्यादिदेशेषु विश्वविद्या-



लयेषु संस्कृतस्य विशिष्टं स्थानं वर्तते। अरबदेशीयविश्वविद्यालयेपि संस्कृतस्य विशिष्टं स्थानं विद्यते इति महदाश्चर्यम्। भारतीयाः भाषास्सकला अपि संस्कृत-विकृतिमया वर्तन्ते। अतः हिन्दीतोपि संस्कृतं सुलभाभ्यस्यं भवति। द्राविडी अपि संस्कृतविकृतिमयी एव वस्तुतत्त्वविचारे। एवं स्थिते संस्कृतभाषा कष्टतरा इति प्रचारः दुरदृष्टकरः। प्राचीनवेदपुराणशास्त्रादिपरिशोधने प्रकृतिरहस्यानि बहूनि बहिर्गमिष्यन्ति। प्रकृतिशास्त्रगवेषणायां संस्कृतं अतीवोपकरिष्यति। संस्कृतभाषायाः जातीयतापादने भारतदेशस्यैव महद्गौरवं भविष्यति। अत्र विषये मुसल्मानानां निरोधः कोपि न भविष्यति। ते भावयन्ति पर्षियाभाषाकलितं उर्दूगभीरा माननीयेति। पर्षियापदानि बहुलतया संस्कृतापभ्रष्टान्येव। एतत्संबन्ध-ज्ञनेनैव आरभवासिनो जनाः कलाशालादशायां संस्कृतं संभावयन्ति।

प्रभुतायाः सहायाभावेपि ज्ञनतैव स्वसंस्कृतेः परिरक्षणाय संस्कृतं परिरक्षेत्। अहं जानामि विंशतिवर्षेभ्यः एषा सभा दक्षिणापथे चे अनितरसाध्यं संस्कृतप्रचारं निरन्तरमातनोति। वर्षत्रयात गैर्वाणीनाम्नीं मासिकीं पत्रिकामपि प्रकाशयति। सुलभललितपदवलिता एषा आसेतुशीतनगं आत्मसाक्षात्कारेण संस्कृतमुद्बोधयति। अपितु एतावता प्रचारेण नालम्। इतः परमपि सर्वतोमुखेन प्रचारेण गृहे गृहे मुखे मुखे च यथा संस्कृतं गुञ्जेत तथा संस्कृतप्रचारः सर्वव्यापनशीलः कर्तव्यः। तदर्थं च प्रभुतायाः ज्ञनतायाश्च साहाय्यं आवश्यकम्। मन्ये इतः परं संस्कृतं अस्मद्देशे प्रमुखस्थानं अधिरोक्ष्यति भारतसंस्कृतिं च रक्षिष्यतीति।

३—५—६५ दिने श्री व्यासाश्रमाध्यक्षाः प. प. श्री विमलानन्दगिरि-स्वामिनः सभामधिगत्य सभाभिवृद्धिमाशासत।

५–५–६५ दिने श्रीशंकररामानुजजयन्त्यौ महावैभवेन सम्मानितौ।

---

जीवकारुण्यान्नदानसमाजमन्दिरे १९—४—६५ प्रभृति ३–५–६५ पर्यन्तं भूमानन्दाश्रमाध्यक्षैः श्री रामकृष्णानन्दस्वामिभिः भगवद्गीताभागवतप्रवचनानि कृतानि। ओंकारध्यानमन्दिरे श्री व्यासाश्रमाध्यक्षैः श्री विमलानन्दगिरिस्वामिभिः ३—५—६५ प्रभृति ५—५—६५ पर्यन्तं शंकरजयन्तीप्रयुक्तज्ञान-प्रबोधाः कृताः।

विज्ञान वेदिका

# भारतीयो विज्ञानवादः

लेखकः — लोकमित्रशास्त्री,
गुरुकुलम्, अयोध्या.

( पूर्वानुबन्धः )

पाश्चात्यानां विज्ञानं भौतिकपदार्थस्य व्याख्यां प्रस्फोटयति। अर्थात् तेन भौतिकं ज्ञानं प्राप्यते, तेन विलासिता मानवघातकसामग्री चोत्पद्यते, यथा मानवमानसं उद्विज्यते। तदुद्वेजनेन न शान्तिः क्वचित्। समेषां कृते सर्वदा भयं जायते। विलोक्यन्ते च सर्वे देशवासिनः कालकवलिता इव। एवंविधेन विज्ञान-विवर्धनेन सहस्रसंख्याकाः मानवाः प्रत्यहं प्रयान्ति अकालं कालसदनम्। मनुष्याणामेव नहि किन्तु समेषां प्राणिनां कृते सर्वतो भावेन भयावहो घातः सिद्धः। ते त्वपरमपि अज्ञानतया द्रुततरमेव धावन्ति कालमुखम्।

एतादृशं विज्ञानं भारतीयं नावलोक्यते। तस्य तु भौतिकविज्ञानविवर्धनेन सहितमात्मज्ञानं मुख्यं वर्तते। तेनाध्यात्मिकतायाः प्रसारो भवति। तेन च मानवानां मनांसि प्रफुल्लानि भवन्ति। भयं व्यपगतं भवति। उक्तञ्च "विज्ञानदीपेन भयं निवर्तते" इति। एवमध्यात्मज्ञानस्य कृते योगदर्शने महर्षिपतञ्जलिना प्रतिपादितं सम्यक्तया यथा — "योगानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः" इति। अर्थात् योगानुष्ठानेनैवाशुचितायाः नाशो भवति, तेन विवेकख्यातिपर्यन्तं ज्ञानस्य प्रकाशो जायते। अर्थात् आत्मनः स्वरूपं बुद्ध्यहङ्कारादीनां च सम्यक्तया ज्ञानं भवति। तेन परमात्मनः स्वरूपं मोक्षश्च प्राप्यते।

भारतीयविज्ञानस्योपयोगः कर्मास्ते। कर्मणः सदुपयोगः भक्तिः, ईश्वर-प्राप्तिः। तया परमानन्दस्वरूपा मुक्तिः। "विज्ञानं यज्ञं तनुते, कर्माणि तनुतेऽपि च" अर्थात् विज्ञानेन यज्ञस्य प्रचारः प्रसारो भवति। "यज्ञो वै श्रेष्ठतमं कर्म" श्रेष्ठकर्माणि नानाविधानि। तथैव व्यापाराः क्रियन्ते।

लयेषु संस्कृतस्य विशिष्टं स्थानं वर्तते। अरबदेशीयविश्वविद्यालयेपि संस्कृतस्य विशिष्टं स्थानं विद्यते इति महदाश्चर्यम्। भारतीयाः भाषास्सकला अपि संस्कृत-विकृतिमया वर्तन्ते। अतः हिन्दीतोपि संस्कृतं सुलभाभ्यस्यं भवति। द्राविडी अपि संस्कृतविकृतिमयी एव वस्तुतत्त्वविचारे। एवं स्थिते संस्कृतभाषा कष्टतरा इति प्रचारः दुरदृष्टकरः। प्राचीनवेदपुराणशास्त्रादिपरिशोधने प्रकृतिरहस्यानि बहूनि बहिर्गमिष्यन्ति। प्रकृतिशास्त्रगवेषणायां संस्कृतं अतीवोपकरिष्यति। संस्कृतभाषायाः जातीयतापादने भारतदेशस्यैव महद्गौरवं भविष्यति। अत्र विषये मुसल्मानानां निरोधः कोपि न भविष्यति। ते भावयन्ति पर्षियाभाषाकलितं उर्दूर्गभीरा माननीयेति। पर्षियापदानि बहुलतया संस्कृतापभ्रष्टान्येव। एतत्संबन्ध-ज्ञनेनैव आरभवासिनो जनाः कलाशालादशायां संस्कृतं संभावयन्ति।

प्रभुतायाः सहायाभावेपि ज्ञनतैव स्वसंस्कृतेः परिरक्षणाय संस्कृतं परिरक्षेत्। अहं जानामि विंशतिवर्षेभ्यः एषा सभा दक्षिणापथे चे अनितरसाध्यं संस्कृतप्रचारं निरन्तरमातनोति। वर्षत्रयात् गैर्वाणीनाम्नीं मासिकीं पत्रिकामपि प्रकाशयति। सुलभललितपदवलिता एषा आसेतुशीतनगं आत्मसाक्षात्कारेण संस्कृतमुद्बोधयति। अपितु एतावता प्रचारेण नालम्। इतः परमपि सर्वतोमुखेन प्रचारेण गृहे गृहे मुखे मुखे च यथा संस्कृतं गुञ्जेत तथा संस्कृतप्रचारः सर्वव्यापनशीलः कर्तव्यः। तदर्थं च प्रभुतायाः ज्ञनतायाश्च साहाय्यं आवश्यकम्। मन्ये इतः परं संस्कृतं अस्मद्देशे प्रमुखस्थानं अधिरोक्ष्यति भारतसंस्कृतिं च रक्षिष्यतीति।

३—५—६५ दिने श्री व्यासाश्रमाध्यक्षाः प. प. श्री विमलानन्दगिरि-स्वामिनः सभामधिगत्य सभाभिवृद्धिमाशासत।

५–५–६५ दिने श्रीशंकररामानुजजयन्त्यौ महावैभवेन सम्मानितौ।

---

जीवकारुण्यान्नदानसमाजमन्दिरे १९—४—६५ प्रभृति ३–५–६५ पर्यन्तं भूमानन्दाश्रमाध्यक्षैः श्री रामकृष्णानन्दस्वामिभिः भगवद्गीताभागवतप्रवचनानि कृतानि। ओंकारध्यानमन्दिरे श्री व्यासाश्रमाध्यक्षैः श्री विमलानन्दगिरिस्वामिभिः ३—५—६५ प्रभृति ५—५—६५ पर्यन्तं शंकरजयन्तीप्रयुक्तज्ञान-प्रबोधाः कृताः।

# विज्ञान वाटिका

## भारतीयो विज्ञानवादः

लेखकः — लोकमित्रशास्त्री,
गुरुकुलम्, अयोध्या.

( पूर्वानुबन्धः )

पाश्चात्यानां विज्ञानं भौतिकपदार्थस्य व्याख्यां प्रस्फोटयति । अर्थात् तेन भौतिकं ज्ञानं प्राप्यते, तेन विलासिता मानवघातकसामग्री चोत्पद्यते, यथा मानवमानसं उद्विज्यते । तदुद्वेजनेन न शान्तिः क्वचित् । समेषां कृते सर्वदा भयं जायते । विलोक्यन्ते च सर्वे देशवासिनः कालकवलिता इव । एवंविधेन विज्ञान-विवर्धनेन सहस्रसंख्याकाः मानवाः प्रत्यहं प्रयान्ति अकालं कालसदनम् । मनुष्याणामेव नहि किन्तु समेषां प्राणिनां कृते सर्वतो भावेन भयावहो घातः सिद्धः । ते त्वपरमपि अज्ञानतया द्रुततरमेव धावन्ति कालमुखम् ।

एतादृशं विज्ञानं भारतीयं नावलोक्यते । तस्य तु भौतिकविज्ञानविवर्धनेन सहितमात्मज्ञानं मुख्यं वर्तते । तेनाध्यात्मिकतायाः प्रसारो भवति । तेन च मानवानां मनांसि प्रफुल्लानि भवन्ति । भयं व्यपगतं भवति । उक्तञ्च "विज्ञानदीपेन भयं निवर्तते" इति । एवमध्यात्मज्ञानस्य कृते योगदर्शने महर्षिपतञ्जलिना प्रतिपादितं सम्यक्तया यथा — "योगानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः" इति । अर्थात् योगानुष्ठानेनैवाशुचितायाः नाशो भवति, तेन विवेकख्यातिपर्यन्तं ज्ञानस्य प्रकाशो जायते । अर्थात् आत्मनः स्वरूपं बुद्ध्यहङ्कारादीनां च सम्यक्तया ज्ञानं भवति । तेन परमात्मनः स्वरूपं मोक्षश्च प्राप्यते ।

भारतीयविज्ञानस्योपयोगः कर्मास्ते । कर्मणः सदुपयोगः भक्तिः, ईश्वर-प्राप्तिः । तया परमानन्दस्वरूपा मुक्तिः । "विज्ञानं यज्ञं तनुते, कर्माणि तनुतेऽपि च" अर्थात् विज्ञानेन यज्ञस्य प्रचारः प्रसारो भवति । "यज्ञं वै श्रेष्ठतमं कर्म" श्रेष्ठकर्माणि नानाविधानि । तथैव व्यापाराः क्रियन्ते ।

आधुनिकपाश्चात्यविज्ञाने भौतिकज्ञानोन्नतिः, तया च प्राणिसंहारः, संक्षोभः, अशान्तिः दुःखञ्चोत्पद्यते । सत्यमेवाह कश्चित् पश्चिमः विपश्चित् "साइन्स फुलफिल्स नीड" इति । अर्थात् विज्ञानेनावश्यकता प्रपूर्यते । आवश्यकतापूर्तौ तृष्णोद्भवः, अतितृष्णया लोभमोहसंवृद्धिः, तया च संघर्षवृद्धिः । इदमेव भौतिकविज्ञानं साम्प्रतिकाशान्तेः कारणं संसारस्य । भूतपूर्वभारतप्रधानमन्त्रिणा श्री नेहरूमहोदयेन लिखितम् – "विज्ञानेन प्रकृतिविचये प्रयतितं परमहो · मानवहृदयमर्यादायै न कोप्युपायः ह्यनुष्ठितः । परिणामतः अद्यतनो मनुष्यः प्रमत्त इव संवृतः, वस्तुतः रचनया सह रचयितुरपि ध्यानेन न तत्सम्बन्धिनी कापि दुरुपयोगभावना मनः प्रविशति । अयमेवाभावः पाश्चात्यदर्शने" इति ।

## उपसंहारः

भारतीयं विज्ञानं तु त्रिविधदुःखोन्मूलनाय, शान्तिस्थापनाय, मोक्षप्राप्त्यर्थं परमात्मसाक्षात्कारार्थं परमानन्दप्राप्त्यर्थञ्च भवति । उक्तञ्च श्री कपिलमहर्षिणा सांख्यदर्शनस्य प्रथमे सूत्रे "अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" इति । अर्थात् दैविक, दैहिक, भौतिक, रूपत्रिविधदुःखनिर्मूलनाय प्रकृतिपुरुषयोः जिज्ञासा कार्या । तया विज्ञानोद्भवेन त्रिविधदुःखस्य विनाशो भविष्यति । तेन सुखशान्तिर्भविष्यति परमानन्दश्चागमिष्यति इति भारतीयविज्ञानस्य लक्ष्यम् । भारतीयविज्ञानं हि न कदाचित् परोक्षसत्तया पृथक् बुभूषति । "सः सर्वेषामपि गुरुः कालेनानवच्छेदात्" इति परेशसत्तामेव केन्द्रविन्दुं मन्यते । तथा चोक्तं महर्षिणा "सर्वसत्यविद्यापदार्थाश्च ये विद्यया ये विद्यया ज्ञेयाः सन्ति, तेषामादिमूलः परमेश्वरः" इति । इयमेवास्तिकभावना भारतीयविज्ञानमेरुदण्डम् ।

सोयं पल्लवितः पुष्पितश्च भारतीयो विज्ञानवादः समन्वयात्मकः, "विज्ञानं वै ब्रह्म" इति दृष्ट्या भारतीयविज्ञानस्योद्देश्यमात्मप्राप्तिः । सेयमात्मप्राप्तिरत्यन्तपुरुषार्थचतुष्टयैः परिसमाप्यते । अत्रवान्तरभूतं विज्ञानमपि मुक्तिसाधकमेव मन्यते भारतीयैः ।

अध्यात्मदृढतरभूमौ संस्थितोऽयं भारतीयो विज्ञानवादः प्राणिमात्रसौख्यशान्तिसम्पादने निःश्रेयसाधिगमे चोपयुज्यते । भौतिकाध्यात्मसामञ्जस्येन प्ररूढोऽयं वादः सर्वविज्ञानावादानतिवर्तते । धन्योऽयं भारतवर्षः यत्र सर्वोऽपि जगदुपक्रमः मंगलमयः कल्याणप्रदः ब्रह्मानन्दसन्दोहजनकश्चास्ति ॥



७

# इन्दुमतीस्वयंवरम्

[ रचयिता - श्री पि. एम्. पद्मनाभशर्मा ]



( पूर्वानुबन्धः )

विदर्भजा – अयि, मास्तु, मास्तु ।

सुशीला – तर्हि क्रमेण पश्यावः ।

[प्रविश्य सुनन्दा] आर्ये भट्टिनि, वधूकमालेयम् । गृह्यताम् । अभिमुखीक्रियन्ते राजानः । प्रतिगृह्यतां कामम् ।

सुशीला – [अपवार्य] सखि, प्रतिगृहीत एव ।

[विदर्भजा लज्जया स्मितं करोति]

सुनन्दा – [विदर्भजां नीत्वा] भट्टिनि, परंतपो नाम यथार्थनामा मगधेश्वरोऽयं । अनेनैव हि सञ्जाता राजन्वती भूमिः ।

विदर्भजा – [सभ्रूभङ्गम्] साधय, साधय ।

सुनन्दा – [अन्यं निर्दिश्य] अयमेवाङ्गनाथः । भूमिगतोऽप्यैन्द्रं पदं अनुभवत्ययम् ।

सुशीला – सुनन्दे, गम्यताम् ।

सुनन्दा – [अपरं निर्दिश्य]

अवन्तिनाथोऽयमुदग्रबाहुः विशालवक्षाः तनुवृत्तमध्यः ।
आरोप्य चक्रभ्रममुष्णतेजाः त्वष्ट्रेव यत्नोल्लिखितो विभाति ॥

( रघुवंशात् )

[विदर्भजा साधयेति अंगुल्या निर्दिशति]

सुनन्दा – अर्ये, अयमेव प्रतीपाख्यो महाराजः । यस्य कुलगुरुः स कार्तवीर्यः ।

सुशीला – सुनन्दे, अन्यं दर्शय ।

सुनन्दा – [अंगुल्या निर्दिश्य] भट्टिनि, शूरसेनाधिपतिरयमेव सुषेणाख्यः ।

[इति अर्धोक्ते विदर्भजाहृदयं ज्ञात्वाऽन्यत्र गच्छति]

विदर्भजा – [अपवार्य] सखि, सुशीले, नागतः सः ? किमर्थं मृषोक्तं स आगत इति ? [इति कुपितेव पश्यति]

[सुशीला चकितचकिता सर्वत्र दृष्टिं प्रसारयति]

सुनन्दा – अयमेव हेमाङ्गदो नाम राजा कलिङ्गाधिपतिः । अयं यदि गजततिभिर्युद्धाय संनह्यते तर्हि न केनाप्यस्य पुरतः स्थातुं शक्येत ।

[ नेपथ्ये ]

भो भो राजानः, युवराजः संप्राप्तो रघुकुमारः । आचारं तावत् प्रतिपद्यध्वम् ।

विदर्भजा – [सहर्षमपवार्य] सुशीले, सफलो मे मनोरथः । आगच्छति सपरिजनो युवराजः । [निरूप्य] अहो रामणीयकमस्य । तथाहि —

मन्दस्मितं मानसहारि, पङ्कजाभं विशालं वदनं सुलोचनम् ।
वक्षो विशालं, धनुषः किणांकितौ भुजौ, गतिर्मत्तमतङ्गजोपमा ॥

सुशीला – [अपवार्य] सखि, स मन्त्रिकुमारोप्यायाति ।

[ ततः प्रविशति यथानिर्दिष्टो राजा । सर्वे उत्तिष्ठन्ति राजानः । यथार्हं संपूज्यासने उपविशति युवराजः । राजानश्च उपविशन्ति ]

सुनन्दा – [ अन्यं निर्दिश्य ]

पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन ।
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः ॥ ( रघुवंशात् )

[क्रमशः]



# राजाजीकथा १३

## तपस्वी निम्बवृक्षः

( आ. वरदराजः )

स कश्चित्पुरातनो निम्बवृक्षः। तस्यैव पार्श्वे अन्यः कश्चित् निम्बांकुरः प्रत्यहं नवनवोन्मेषेण प्रवर्धमान आसीत्।

अम्ब! अहमपि किं त्वमिव तिक्ततां प्राप्यैव वर्धेय-इति जिज्ञासां दर्शयन्नपाक्षीत् निम्बांकुरः।

नो चेदथ कथं वर्धिष्यसे! तथैव वर्धिष्यसे, यथाऽहम्। किं तन्नरोचते तुभ्यं? - इत्याह निम्बवृक्षः।

केवलं भेषजाय उच्चाटनाय चैव (मन्त्रोच्चारणपुरस्सरं) त्वत्सकाशं आगच्छन्ति सर्वे। रसास्वादनाय आगतं न कमप्यहमपश्यम् - इत्याह निम्बांकुरः।

भेषजानि उच्चाटनान्येव खलु दुःखापहानि। मधुरं फलं किं दास्यति? तदास्वादनानन्दः तालुतलावधिकस्सन् क्षणिको भवति। कण्ठं प्राप्तस्य कस्य वा स्वादिष्ठस्य पदार्थस्य स्वादः प्रतीयते? न कस्याऽपि; मधुरान्मधुरं मधुरतममेव वा भवतु; स्थिरं सुखं नैव दातुं शक्नोति। तथात्व एव मे महती तृप्तिः। यथाऽहमस्मि त्वमपि तथैव भव वत्स! - इत्याह मातृ - वृक्षः।

मम तु महानभिलाषः - समीचीनः कालनिम्बो (करिवेपः) भूयासमिति चिरमाकाङ्क्षे - इत्याह शिशुवृक्षः।

माऽस्तु वत्स! मास्तु; त्वमपि दीर्घायुस्सुखी भव, यथाऽहम्। अन्येषां सुखदुःखविचारोऽस्माकं माऽस्तु। तत् दृष्ट्वाभिलष्यते चेत हानिरेव स्यान्नः-इति वृद्धनिम्बः नीतिसंदेशमदात्।

शिशुवृक्षः न तत्कर्णेऽकरोत्। "अहं निम्बो भवितुं नैव काङ्क्षे" - इत्याह सः निश्चयचम्। गणपतिं ध्यात्वा तमेव वरं प्रार्थयामास च। निम्बशिशुः सहसा कालनिम्बः परिणतः।

द्वित्रान् हस्तान् उच्छ्रित्य प्रवृद्धस्यैव तस्य पार्श्वस्था गृहिणः सर्वे एकैकशस्समागत्य पाकाय किंचित् शाकाय किंचित् इति यथाभिलषितं कालनिम्बदलानि वारं वारं सञ्चित्य गन्तुमारब्धाः। केचन दयालवस्तु प्रौढान्येव दलानि सञ्चित्य गताः। केचित्तु शाखोपशाखा एव भङ्क्त्वाऽदाय गताः। अन्ये केचन अन्विष्यालोक्य नवपल्लवान्येव छित्वाऽदाय गताः। पाकाय तादृशान्येव कालनिम्बदलानि (करिवेपाकु) प्रशस्तानि इति ते तथाऽकुर्वन्। शिष्टं वृक्ष अन्येद्युः कदाचित् मेषः कश्चिदागत्य जग्ध्वा जगाम।

निम्बमूलं पुनः भूतलस्याऽधस्तादद्यापि वर्तत एव। भगवतो गणपतेर्वरः यावन्मूलं नाभिव्याप्तः। एवं भवेदिति स प्रथममेव नूनं जानातीव। अतस्स वरं न द्रुतं प्रसारयामास आमूलम्।

अम्ब! स्मृतिर्लब्धा, नष्टो मोहः - इत्याह शिशुवृक्षः मातृवृक्षं प्रति। किमु, वत्स! अद्याप्यसि?–इत्यापृष्टं मातृवृक्षेण। अम्ब! अलमाशया। महान् प्रमादस्समजनि। तिक्ततां गतस्यैव सतो मे योगक्षेमौ भविष्यतः–अद्यावगतम्। पाकयोग्यतां गतस्यैव सतो मे यावती बहुजनप्रियता सम्पादिता तावदेव च कष्टमनुभूतम्। निर्विरामं आत्मनः सम्पद्यमानं नाशमेव पश्यन्नासम्। दयस्व मे किञ्चिदिव, दर्शय चाजीविकां, यतोऽहं निरपायं स्वेनैव मार्गेण यथोचितं जनोपयोगी भवेयम्। सुखमयं शान्तिप्रदं च जीवनं यापयेयम्–इति प्रार्थयामास।

पुनस्तमेव गणानांपतिं प्रार्थय – इति संदिदेश मातृवृक्षः। अहमपि त्वदर्थं प्रार्थयामि यावत्–इत्याह। यथोक्तमेव निजभक्तियुक्ती समग्रं विनियुज्य स्वशिशुसंरक्षणाय मातृवृक्षेण प्रार्थितम्।

मूलं पल्लवितम्। निम्बवृक्षतया स शिशुः सम्यक् प्रवृद्धः। ग्रामीणाः पुनः कालनिम्बदलार्थं तत्रागताः। तिक्ततां गतानि निम्बदलानि दृष्ट्वा शून्यहस्तैर्गता यथागतम्। शिशुवृक्षः निरपायं निरामयं च प्रवर्धितः। ग्रामीणाः कुक्कुटाः समेत्य वृक्षस्य अधः कीटान्वेषणार्थं यथेष्टं नखाग्रैः प्रलेखनखननादिना आलवालं सम्यगकर्षन्निव। तत्तस्य वृक्षस्य बहूपकृतम्; शिशुवृक्षः नवनवोन्मेषेण प्रवृद्धः। तत्पत्राणि नवानि प्रौढानि इत्यविगणय्य शाखोपशाखं भङ्क्त्वाऽदाय गन्तारोऽद्यत्वे विरला नकारार्था एव वाऽभवन्। मातृवृक्षस्यापि अनन्दोत्सेकेन तदुपरि पुष्पवृष्टिः कृता।



# संस्कृतमेव अधिकारभाषा भूयात् !



पत्रिकावार्तासंपादकानां गोष्ठीपु प्रकाशिताः आन्ध्रप्रदेशप्रमुखाणां केषांचन महोदनां भावाः अत्र प्रकाश्यन्ते ।

## श्री तेन्नेटि विश्वानाथः वदति —

संस्कृतं यावद्भारतभाषा । अतः सा हिन्द्याः प्रत्याम्नायत्वेन अधिकारभाषापदमारोपयितुं शक्यते । अत्र भाषायां भारतजातीयसंस्कृतिः परिपूर्णतया प्रतिबिम्बिता भवति । हिन्द्याः स्थाने संस्कृतस्याधिकारिकत्वमुचितम् । अस्य अभ्यासः कष्टतरो न भवति । अस्य अधिकारभाषात्वसाधने सुलभाभ्यासाय च अहं कांचन प्रणालीं सूचयामि । अस्मिन्नेव वर्षे शिशुभिः सर्वैरपि संस्कृताभ्यासः प्रारब्धः चेत् कक्ष्याक्रमेण अष्टसु वर्षेषु स S. S. L. C. स्थितिं प्राप्नोति । ततः चतुर्षु वर्षेषु विशिष्टांशानां अध्ययनमपि संस्कृते कारयितुं शक्यते । यथाकथमपि षोड़शवर्षानन्तरं संस्कृतं पूर्णतया आधिकारिकत्वेन व्यवहर्तुं सुकरं भविष्यति । १८ वत्सरेभ्यः परतः सर्वापि माता संस्कृतभाषिणः शिशोः जननी भविष्यति । एतया प्रणाल्या संस्कृतभाषायाः आधिकारिकत्वप्रसाधनं दुर्लभं न भविष्यति । मन्त्रित्वशाखासु मार्गदर्शकाणां पण्डितानां केषांचन नियोजनेन संस्कृतभाषया राज्यव्यवहारनिर्वहणं च सुकरं भविष्यति ।

एषा आर्याणां भाषा इति केषांचन भीतिः यदि भवेत् हिन्दीविषयेपि सा समाना । अतः वास्तविकतानिदर्शनेन सा अपनेया इति ॥

## आचार्यः श्री मामिडिपूडि वेंकटरंगय्यः वदति —

अधिकारभाषापीठमधिरोढुं संस्कृतभाषा सकलविधयोग्यतावतीति मे निश्चयः । वस्तुतः हिन्द्याः अपि संस्कृतमेव अनुकूलं तत्पदव्यै । विषयः कियानपि क्लिष्टो भवतु, तत्प्रदिपादनायानुकूलं शब्दजालं संकलयितुं शक्यते

संस्कृते । अतिक्लिष्टमपि भावं सुगमतया विवेचयितुं शक्यते तस्मिन् । सर्वाणि शास्त्राणि संस्कृते वर्तन्ते । अधुनातनान्यपि तस्मिन् रचयितुं अभिवर्धयितुं बोधयितुं च सुकराणि भवन्ति । संस्कृतस्वीकरणमेव अद्यतनभाषाविवादस्य निराकरणमार्ग इति अहं विश्वसिमि । संस्कृतं मृतभाषा इति वादः असत्यः । इस्रायल्देशे हीब्रूभाषा अधिकारभाषा वर्तते । संस्कृतभाषाविषये अस्मद्देशे हिन्दी-विषये इव महान् व्यतिरेकभावः न भविष्यति । नित्यव्यवहारानुकूलत्वेन संस्कृतं साधयितुं शक्यते । समुद्रसदृशं पदजालं संस्कृते विद्यते । मम अभिप्रा-येण संस्कृताभ्यासः हिन्द्यभ्यासात् सुकरः भवति । बोधनापद्धतीनां परिवर्तनेन एषा भाषा अतिसुलभा भविष्यति । द्राविडेषु केषांचन व्यतिरेकतां निवारयेम चेत् एषा सर्वसम्मता भविष्यति । पाश्चात्याः अल्पकालेन एव एतां अभ्यस्यन्ति । एवं सुलभपद्धतिभिः संस्कृतमभ्यस्य निपुणीभूताः ते अधुना अस्मद्देशेपि केचन वर्तन्ते ।

भाषासमस्यायाः पुनःपरिशीलनसमयेस्मिन् भाषाविदां विद्याविदां प्राज्ञानां च सदः संपाद्य तन्मतानुरोधेन निर्णयमिति अहं तर्कयामि । अहमपि एतद्विषये प्रधानमन्त्रिप्रभृतिभ्यो लेखान् विसृजामि इति ।

### श्री गिडुगु सीतापतिः एवमाह —

अधिकारभाषापीठमधिगन्तुं संस्कृतस्यैकस्यैव अधिकारः वर्तते । तस्य तथात्वापादनं च सुलभं भवति । अद्यतः प्रयत्ने दशसु वर्षेषु अस्माकं इष्टसिद्धिः भविष्यति । संस्कृतं केचन एव जानन्ति इति कश्चन अपोहः विद्यते । अहं संस्कृते अधुना भाषे । भवद्भिरेव चिन्त्यतां किमत्र न ज्ञातं भवद्भिरिति (एवमुक्त्वा सः १५ निमेषान् यावत् अभाषत । वार्तासंपादकाश्च किमिदं संस्कृतं? इति विस्मिता अभवन् । सीतापतिः आन्ध्यां स्वप्रसंगं पुनरपि अन्ववर्तयत) तदा तदाहं एवं खट्वायां निषण्णः अभ्यासार्थं उन्मत्त इव संस्कृतं भाषे । संस्कृतं एकमेव राज्यभाषा भवितुमर्हति । परभाषायाः आंग्ल्याः अभ्यासे वयं अतीव क्लेशमनु-भवामः । संस्कृतं तु ततः सुगमतरतया अभ्यसितुं शक्यते । सौलभ्यकारणानि वदामि शृणुत । पदानि, पदोच्चारणं भाषास्वरूपं इत्यादिकं अस्माकं पूर्वपरिचित-मेव । केवलं शब्दान्ता एव अपरिचिताः अकारान्ताः इकारान्ताः इत्यादिरीत्या

एतत्सूक्ष्मताज्ञाने संस्कृतं लीलया अभ्यस्यामः । उपनिषत्सु संस्कृतं अतिसुलभं वर्तते । बाणादिग्रन्थेष्वेव प्रौढसंस्कृतं श्रूयते । उपनिषत्सु कथानिकाः गल्पिकाः संभाषणानि सुलभग्राह्याणि भवन्ति । विश्वविद्यालयदशायां बोधनार्हता संस्कृतस्यैव वर्तते न हिन्द्याः । श्री काशी कृष्णाचार्यप्रभृतीनां पंडितानां साहाय्येन सुलभसंस्कृतं व्यवहारे अवतारयितुं शक्यते । अद्य तावत् अंग्लं अनुसंधानभाषात्वेन व्यवहरिष्यामः । भारतदेशस्य संस्कृतमेव अधिकारभाषापदार्हा इति मदभिप्रायः इति ॥

### श्री ए. एस्. अवधानी अवदत् —

हिन्दीभाषवादं दाक्षिणात्या न मर्षयन्ति । किन्तु एतैः प्रतिपाद्यमानः आंग्लभाषावादोपि अनुचित एव । भारतसंस्कृतेः परिरक्षणं यद्यभिलषेम तर्हि आंग्लं दूरतः परित्याज्यमेव । आंग्लेन देशभाषाणां आपद् अधिका वर्तते । भारते एकजातितायाः उद्बोधनाय संस्कृतमेव शरणं भवति । बोधनाय आंग्लमेवानुकूलमिति वादः अनुचितः । संस्कृते अनुट्टंकितः अबोधितः विज्ञानविषयः (science) नास्त्येव । संस्कृतभाषाद्वारैव सूक्ष्माणां गंभीराणां च सकलविषयाणां बोधनं सुकरं भवति । ऐरोपाराज्यभाषाणां च मूलभूतमिदं संस्कृतं आंग्लादपि अन्तर्जातीयभषात्वेन गौरवपदं अधिवहति । आंग्लभाषावशादेव भारतदेशे एकता साधिता इत्यपि अविश्वास्यम् । बहिः उदुम्बरफलवत् दृश्यमाना किंकरतारूपैकता न जीविष्यति बहुकालम् । संस्कृतं अस्मज्जातिसंपत् । पूर्वं संस्कृतमिव अद्य आंग्लम् जातीयैकतां संरक्षिष्यतीति राजाजीवचनं च आपातरमणीयम् । वस्तुतः अस्मदभिप्रायेण संस्कृतस्य आंग्लस्य च महदस्ति अन्तरम् । आंग्लम् प्रापंचिकविषयेषु आभिमुख्यं जनयति, संस्कृतं तु आमुष्मिकेषु । यथार्थविचारे परनिर्बन्धेन वयमयोग्यं आंग्लं अभ्यसितवन्तः । शतवर्षतपसा सा आंग्ली अस्मदीया नाऽभवत न भविष्यति च । श्री विनोबाभावोपि न समीचीनः त्रिभाषासूत्रमाधारीकृत्य हिन्दी आंग्लं प्रान्तीयभाषा चेति त्रितयमपि वर्तेतेति । बहुलासु प्रान्तभाषासु परीक्षाणां निर्वहणं, तत्रोत्तीर्णानां च प्रान्तान्तरेषु विदेशीयताभावजनकं भविष्यति । ततः उदीच्यैः दाक्षिणात्यायाः एकस्याः भाषायाः अवश्याध्ययननियमः अभिसूचितः । स श्रवणरमणीयः नाचरणसाध्यः भवति ।

अतः द्विभाषासूत्रमेवावलम्ब्य संस्कृतमाश्रित्य एतं विवादं परिहर्तुं शक्यते । अस्यां पद्धतौ आंग्लं तात्कालिकतया, तत्स्थाने संस्कृतं शाश्वततया समावेश्य प्रान्तभाषाबोधनं कर्तुं युज्यते । अथवा त्रिभाषाविधाने हिन्दीस्थाने संस्कृतमावेश्य संस्कृतं, आंग्लं, मातृभाषा इति बोधयितुं शक्यते ।

संस्कृतमेव शाश्वतं अधिकारभाषा भवेदित्येतदेव भाषाविवादपरिष्कार-मार्गः । अपितु अयं वादः बहुलतया न श्रूयते । राजकीयचतुरङ्गे अयं वादः निरसिष्यते इति भिया बहवः इमं वादं स्वकण्ठे एव स्थगयन्ति ।

एतस्य अधिकारभाषात्वयोग्यताकारणानि अधः उच्यन्ते ---

१. एषा भारतजातेः भाषा । एतद्देशभाषाणां सर्वासामपि एषा मातृका भवति । तावदेव न, युरोपीयभाषाणामपि मूलं संस्कृतमेव । अत एव एषा अन्तर्जातीयभाषा भवति । एषा नूनं घटकभाषा च भवति । एतद्रूपेणैव एषा सहस्राब्देभ्यः निष्पन्ना प्रपंचघटकतां साधयति ।

२. भारतीयसंस्कृतिस्सर्वापि अत्र निक्षिप्ता वर्तते । ज्ञातव्यं सर्वमपि अत्रैव निहितं वर्तते । अनभ्यासात् विज्ञानप्रकाशः मलिनः अभवत् । तस्मात् पुनरपि तां स्वीकृत्य आत्मज्ञानं साधयेत् ।

३. परिपालननिर्वहणाय, शासननिर्माणाय, न्यायनिर्णयप्रकाशनाय, शास्त्रीयविज्ञानबोधाय च अनुकूला एषा परिपूर्णा । एषा स्वयं परिपुष्टा प्रभुतायाः संकेतमात्रमपेक्षते ।

४. एषा कस्यापि प्रान्तस्य भाषा न भवति, अपितु सर्वस्यापि भारतस्य भाषा च भवति । अतः एतदभ्यासे सौकर्यासौकर्ये सर्वेषां समाने एव भवतः । सकलप्रान्तभाषासु मिलिता एषा सकलजनमाननीया सकलजनव्यवहार्या वेद्या च भवति ।

५. शास्त्राणि पुराणानि ज्ञेयं समस्तमपि विज्ञानं अस्यामेव वर्तते । तादृश-विज्ञानप्राप्तये एषा राज्यभाषात्वेन प्रकाशनीया ।

६. एषा भाषणे गंभीरा, अभिप्रायप्रकाशने अनुगुणा, दिव्याभाषा मन्त्रोचिता सर्वांगसुन्दरी खण्डान्तरीयाणामपि कुतूहलविषया, प्रपञ्चे भारतगौरवस्य मूलबीजभूता ।

एतस्याः अभ्यासः कष्टतरो न भवति । भारतीयस्य सर्वस्यापि आंग्लाभ्यासादपि सुलभतरो भवति अस्याः अभ्यासः । अस्मत्प्रान्तभाषासु सकलास्वपि अर्धादधिकतया संस्कृतपदानां व्यवहारो वर्तते । उत्तरभारतवासिनां लिपिसौकर्यमप्यधिकं भवति । अस्याः व्याकरणं कष्टमिति वाक्यरचना च दुर्घटेति किंवदन्त्यौ सुखं निराक्रियेयाताम् । उच्चारणं कठिनमिति एषा ब्राह्मणानां एव धनमिति च असत्यः प्रचारः । सर्वेपि श्लोकान् श्राव्यं पठितुं शक्नुवन्त्येव । प्राच्यविद्यालयेषु पाठशालासु च सकलवर्णाः जनाः संस्कृतं पठन्त्येव । यदि संस्कृतं अधिकारभाषा भविष्यति तर्हि नियतं नैतिकपुनरुज्जीवनं भविष्यति । दैवभक्तिः शीलं च सुसमृद्धे भविष्यतः । प्रपंचचरित्रे एव नूतनाध्यायः प्रारभ्येत । भावविप्लवसंपादनद्वारा भारतस्य प्रपंचाधिपत्यमेव सिद्ध्येत् । राज्यांगशासननिबद्धासु भाषासु चतुर्दशसु एषाप्येका वर्तते । हिन्द्या अपि संस्कृतादेव पदजालचयनमामोदितम् तत्र । अधुनोच्यते अन्यद्वारा संस्कृतव्यवहारात् वरं खलु साक्षात्संस्कृतस्य व्यवहार इति । दक्षिणापथात् एतादृशः हिन्दीनिरोधः आगमिष्यतीति ते न अजानन् । इदानींतु संजातेन अनुभवेन हिन्द्याकर्षणस्य आंग्लाकर्षणस्य प्रतिक्रियारूपेण संस्कृतमंगीक्रियेत चेत् सर्वं समंजसं स्यात् । इदं तु सर्वसम्मतं मतं स्यात् । श्रीराधाकृष्णपंडितः संस्कृताभिमानी च अस्मद्राष्ट्रपतिः वर्तते । अतः अयमेव शुभसमयः संस्कृतांगीकाराय । मछलीपट्टणे एतेनाभिप्रायेणैव १४—३—६५ दिने कश्चन समावेशः समजनि । तत्र "संस्कृतम् अधिकारभाषा भवतु, तत्सिद्धिपर्यन्तं आंग्लं अनुस्यूतं भवतु" इति प्रस्तावः पारितः । एवमेव स्थले स्थले संस्कृतभाषा अधिकारभाषा भवतु इति वादः गुञ्जतु दशसु दिशासु इति ॥

॥ जयतु संस्कृतम् ! जातीयैकता प्रवर्धताम् ! ॥



भारतप्रधानमन्त्रिपदवीसमारोहसमये
श्री लालबहदुरशास्त्रिमहोदयेभ्यः समर्पितः

# काव्यपुष्पोपहारः

श्रीमद्गीर्वाणविद्यासुहितभरतभूमन्त्रिवर्यं प्रधानं
विद्वद्गोष्ठीषु निष्ठं सदयसुहृदयं लोकसेवागरिष्टम् ।
पाश्चात्य प्राच्यदेशप्रथितपथजुषां संस्कृतीनां प्रतीकं
श्रीमन्तं लालबहादूरबुधमनुकलये कामनाभिश्शुभाभिः ॥
न्याय्यं धर्ममथो सुखं जनपरित्राणं च सन्धित्सतः
मन्त्रीन्द्रस्य तव प्रशस्तिरतुला व्याप्नोति लोकेऽखिले ।
एतादृग्गुणरत्नशेवधिमिमं त्वां प्राप्य देशावने
श्रीमद्भारतवासिनः प्रतिदिनं निश्चिन्तेमाशेरते ॥
अन्वर्थः शास्त्रिशब्दः तव भवति नृणां शासनात् धर्ममार्गे
लाल्बहदुर्! त्वत्सदृक्षो नहि नहि धरणौ लभ्यते शान्तमूर्तिः ।
एतादृक् सुप्रतिष्ठां भवदतुलदयासम्पदा प्रापितेयं
गायन्ती त्वत्प्रतिष्ठां सकलभरतभूदेवभाषीयसंस्था ॥
विख्यातो हि भवानजातरिपुरित्यस्मिन् महीमण्डले
गीर्वाण्या अवने च भारतपुरासंपत्समावर्धने ।
धर्मस्योद्धरणे प्रजासुखहितासक्तौ प्रजाराधने
मूर्तिः भारतसंस्कृतेरिति जनैः रात्रिंदिवं सेव्यते ॥
निष्णातः प्राच्यविद्यास्वनितरधिषणो दुर्गमे राज्यतन्त्रे
विद्वान् पाश्चात्यतन्त्रेष्वखिलभरतभूवासिनां भाग्यसीमा ।
राज्यानां पालने च प्रभुरिति निपुणो ह्यप्रधृष्योऽर्थगम्यः
जीयात् श्री लाल्बहदुर् अतिशतशरदः भारतं सेवमानः ॥

इति,

के. लक्ष्मणशास्त्री (हैदराबाद)
अ. भा. सं. सा. सम्मेलनस्य कार्यकारिसमितेः सदस्यः.

# फलाय धनवपनम्

"साहित्यभूषणं" पडाल ब्रह्मारेड्डिः,
कोंकुदुरु.

वङ्गेषु दीर्घनासिको नाम मितम्पचः आसीत्। लक्षाधिपतिः स सन्तानहीनोऽपि प्रत्यहं परिश्रमं कृत्वा धनं सम्पादयन्नेव अवर्तत। युवावस्थायां सन्तानप्राप्त्याशया भार्यया साकं नीरसमेव भोजनं भुक्त्वा उदरपोषणमकरोत्। तस्य भार्याऽपि दीर्घनासिकापेक्षयाधिकं कृपणा आसीत्। लक्षाधिपतिरिति यद् गौरवमिदानीमावयोः प्राप्यते, तद्यदि धनं व्ययितं कुर्वः, तर्हि नाग्रे तत् स्थास्यतीति तयोर्विश्वासः। अथ दीर्घनासिकस्य पत्नी केनचिद् रोगेण ग्रस्ता सञ्जाता। ईषद् मुधा देयम् भवेदिति पत्न्या बोधितो मितम्पचो दीर्घनासिकः कञ्चिदपि वैद्यं नाह्वयत्। औषधाभावेन भार्या अम्रियत। इदानीं दीर्घनासिकः एकाकी संवृत्तः।

अथ दैववशात् केनचिद् भक्तेनोपदीष्ठो दीर्घनासिकः अवकाशसमये किंचिद् भगवतः शम्भोः स्मरणं पूजाञ्च कर्तुमारेभे। स मितम्पचः पूजायै अपि धनव्ययमसहमानः कदापि नारिकेलफलं रम्भाफलं वा नाक्रीणात्। पूजावसरेतु एकनिष्ठया भक्त्या च भगवन्तं शङ्करमाराधयति स्म। कस्यचिद् बन्धोः पुत्रं पालयितुं दीर्घनासिकस्य इच्छा उद्भूता।

अथैकदा दीर्घनासिकेन एकः स्वप्नः दृष्टः। तस्मिन् स्वप्ने कृपणो दीर्घनासिकः आविर्भूतं शङ्करमेवमपृच्छत्–"हे शम्भो! भूमौ बीजवपनेन तरवः लताश्च उत्पद्यन्ते, ततः फलानि धान्यादिकञ्च उद्भवन्ति खलु। एवञ्च कानिचिद् बीजानि उप्त्वा मानवाः अनेकानि फलानि धान्यानि च लभन्ते। इत्थमेवाधिकधनस्य प्राप्तये कथमिव कुत्र वित्तं वपनीयं वा कृपया मह्यं विशदीकरोतु भवान्" इति।

भगवता शङ्करेणैवमुक्तम् – "निर्धनेभ्यो याचकेभ्यः शुभकार्यार्थञ्च यद् धनं यावन्मात्रेण दीयते, तदेव खलु धनबीजवपनम्। कालं प्राप्य तद्धनं पुष्पितं फलितञ्च भविष्यति। तादृशः धनस्य क्षेत्रे उप्तानां बीजानामिव कीटरोगादिभ्यो भयं न भवेत्। सदा तत् फलिष्यत्येव उपचारादिरहितमपि"।

दीर्घनासिकः अपृच्छत् – "अहं कस्यचिद् बान्धवस्य पुत्रं पालयितुमिच्छामि। तस्मै च सर्वं धनं दास्यामि। किं ततः अहं सुफलं प्राप्स्यामि?" इति।

शङ्करः प्रत्यवदत् – "यद्धनं त्वं आत्मनः उदरपोषणायापि व्ययितुं न पारयसि, तत् किं कस्यचित् पालितपुत्राय दित्ससि? पालितपुत्रो निर्धनो याचको वा वद। यथा पर्वते उप्तानि बीजानि नोद्भवन्ति, तथैव अपात्रे (दानायोग्याय पालितपुत्राय) दत्तस्य वित्तस्य किञ्चिदपि फलं नास्ति। अतः निस्सन्तानेन नास्तिकेनास्तिकेन वा धनं भक्षणाय दानाय धर्माय च व्ययितव्यम्। एकं रहस्यं वदामि लौकिकदृष्ट्यैव। यदि मानवो मदुक्तप्रकारेण कुर्यात्, तर्हि आस्तिकः आत्मनः विश्वासतः पुनर्जन्मनि धनिको भविष्यति खलु। किञ्च नास्तिकस्तु धनं सम्यग्भुक्त्वा एकवारलभ्यं जन्मैतत् सफलीकरिष्यति खलु। सर्वज्ञंमन्यो मानवः मायाविमोहितः सन् सत्यमेतदपि ज्ञातुं न शक्नोति" इति।

अथ व्यपगतव्यामोहो दीर्घनासिकः परेद्युःप्रभृति धनेन सुखं भोक्तुं निर्धनेभ्यो याचकेभ्यश्च वित्तं दातुमारभत।



## प्रातर्वर्णनम्

### श्री वि० रामानुजाचार्यः

विकसयन् स्वकरैरिह पद्मिनीं विरचयन्परिचुंबनमर्यमा।
अधररागसुदीप्तदिवामुखं स्वयमुदेत्यरुणारुणभानुमान्॥ ॥ १ ॥
कमलाकरनिहितकरः कल्ये रागी स्वयंहि हंसोऽपि।
हर्षयति पद्मिनीं तां विकसितकुचकुड्मळां करस्पर्शात्॥ ॥ २ ॥
कल्ये ह्युपस्थानकृतत्वराणां दिशन्स्वसेवामुदयन्द्विजानाम्।
कृषीवलान् स्वस्वकृतिप्रविष्टान् प्रच्यां रविर्भात्यरुणांशुरद्य॥ ॥ ३ ॥
कन्धरस्थयुगलांगला नरा दण्डनुन्नवृषभाः कृषीवलाः।
स्वस्वभूमिपरिकर्षणादराः कल्य एव च विबुध्य यान्ति हि॥ ॥ ४ ॥
कृष्यादिकार्यैश्च दिनांशुतापैः खिन्नान् जनान्निश्श्यतिनिद्रितान् स्वैः।
कुक्कूरवैरद्यहि ताम्रचूडाः प्रभातकाले प्रतिबोधयन्ति॥ ॥ ५ ॥
अरुणकिरणरागिण्यंबरे कल्यकाले निजनिजसुकुलायान्पक्षिसंघा विहाय।
मृदुरवसहसुप्ता वेदितस्वीयकार्यानथ सुविवृतपक्षा लब्धलक्ष्याः प्रयान्ति॥६॥



# भाषाविवादः

समुद्राल लक्ष्मणः

अस्मिन्वत्सरे च जनवरिमासान्ते फिब्रवरिमासारम्भे च अधिकारभाषा-मुद्दिश्य दक्षिणभारते विशिष्य मद्रराष्ट्रे प्रवृत्ता दुर्घटना सर्वेस्यापि जनस्य महान्तं खेदमावहतीति सुविदितमेतत् ।

भारतराज्याङ्गानुसारेण १९६५ जनवरि २६ तिथिमारभ्य आंग्लभाषाया अधिकारभाषापदान्निवृत्तिः, तत्स्थाने हिन्दीभाषाया निवेशनं च भवति । उत्तर-देशीयानामनेकेषां हिन्दी मातृभाषा, अपि च अस्मद्देशे भाषान्तरापेक्षया हिन्दी-भाषैव बहूनां जनानां सुपरिचिता चेति मत्वा राज्याङ्गनिर्मातृभिः तस्या जातीय-भाषाप्रतिपत्तिः पर्यकल्पि । एतत्परिकल्पनसमये दाक्षिणात्यैः नायकैरपि विषयेऽस्मि-न्नङ्गीकारः प्रदर्शित एव । अपरिचितहिन्दीभाषाणामन्येषां जनानां तत्परिचययावकाशं दातुमेव राज्यांगे पञ्चदशवत्सरपर्यन्तं आंग्लभाषयैव व्यवहारनिर्वाहो भवेदिति प्रति-पादितम् । एवञ्च निर्णीतसमयानन्तरमपि दक्षिणदेशे हिन्दीविरोधः किमर्थं प्रवृत्त इति विज्ञैः सर्वैः समालोचनीयोऽयमंशः ।

तत्र तावत्प्रथमं प्रधानं च कारणं आंग्लभाषायाः प्रचाराधिक्यं हिन्द्या-श्चाल्पतरः प्रचार इति मे प्रतिभाति । स्वातन्त्र्यसिद्धेः पूर्वं यादृशं गौरवं आंग्ल-भाषाया आसीत्, ततोऽप्यधिकं गौरवं प्राभवं च स्वातन्त्र्यसिद्ध्यनन्तरमपि तस्यै भाषायै परिकल्पितमस्मन्नायकैः । तथाहि । सर्वेष्वपि अस्मदीयेषु विश्वविद्यालयेषु विद्याबोधनमांग्लभाषायामेव प्रचलति । आंग्लविद्यानिष्णातेभ्य एव उद्योगा दीयन्ते । प्राथमिकपाठशालासु तृतीयकक्ष्यामारभ्य सा भाषा बोध्यते । न्यायालयेषु इतरेषु च केषुचित्कार्यालयेषु तां भाषां विना अन्यासां भारतीयभाषाणां प्रवेश एव नास्ति । तद्भाषापरिचयहीनः संस्कृतान्ध्रादिदेशभाषासु बहुधा कृतश्रमोऽपि कश्चिज्जनः विद्यागन्धविहीन इत्येव परिगण्यते । एतादृशः प्रचारः दक्षिणभारते हिन्दीभाषाया नास्ति खलु । नाम्ना परं सा जातीयभाषा । पाठशालास्वपि

हिन्दी समुचितं स्थानं न प्राप्नोति । तत्फलत्वेन दक्षिणदेशे आंग्लभाषाकोविदानामाधिक्यं, हिन्दीभाषावेदिनां च न्यूनता जाता ।

"यदि राज्याज्ञानुसारेण हिन्दी अधुना अधिकारं लभते, तदाऽस्मद्गौरवं प्रणष्टं स्यात्" इति आंग्लभाषाविज्ञाः, न्यायवादिप्रमुखाः, उद्योगिनश्च बिभ्यति । विद्यार्थिनामसन्तृप्तेरपि इदमेव कारणम् । एतेषामेषा भीतिः असन्तृप्तिश्च सहजैवेति पूर्वोक्तहेतुभिः स्पष्टम् । तस्मात् हिन्दीभाषायै अधिकारदानात्पूर्वं तस्या आंग्लभाषाऽपेक्षया अधिकतरः प्रचारः अहिन्दीप्रदेशेषु करणीयोऽभवत् । तदकरणमेव प्रकृतदुर्घटनानां कारणमित्यत्र न कोऽपि संशयः ।

अथ ये तावत् हिन्दीं सर्वात्मना नाङ्गीकुर्वन्ति, आंग्लभाषामेव शाश्वताधिकारस्थाने निवेशयितुमिच्छन्ति, तानुद्दिश्य किंचिद्वक्तव्यं भवति । यद्यपि कोटिशः रूप्यकाणि आंग्लभाषाप्रचारार्थं बहोः कालादारभ्य अस्मद्देशे व्ययं गमितानि, तथाऽपि अद्युना प्रजासु प्रतिशतं द्वावेव आंग्लभाषावेदिनौ वर्तेते । परिपालनविधानस्य विदेशभाषानिबद्धत्वात्, साधारणप्रजाः तदनवबोधेन बाधिताः सम्पद्यन्ते । तथा च अल्पाल्पसंख्याका एते आंग्लभाषावेदिनः तदनभिज्ञेषु बहुषु जनेषु निरंकुशमधिकारं प्रदर्शयन्ति । राज्यतन्त्रे अविनीतिश्च पदं निक्षिपति । यस्मिन् राज्ये पालनकार्यकलापः अधिकसंख्याकानां जनानां अवगतो न भवति, तत्कथं प्रजाराज्यं भवितुं शक्नोति? तस्मात् आंग्लभाषैव शाश्वताधिकारस्थानं आप्नोतु इति वादः सर्वथाऽनुपपन्नः, जातीयताविरुद्धश्चेति निराक्रियते ।

अत्रापरः प्रश्न उदेति – यदुक्तं साधारणप्रजा आंग्लभाषां नावगच्छन्तीति, तच्च अहिन्दीप्रदेशेषु हिन्दीविषयेऽपि तुल्यं खलु इति – । तत्रेदं समाधीयते । अस्मद्देशभाषाः सर्वा अपि प्रायशः संस्कृतादुत्पन्ना एव । द्रविड़भाषाशब्देन व्यवह्रियमाणासु आन्ध्रतमिलादिषु दाक्षिणात्यभाषास्वपि संस्कृतपदानि सहस्रशः उपयुज्यन्ते । हिन्द्यां प्रयुज्यन्ते । तस्मादल्पक्लेशेनैव दाक्षिणात्याः प्रजाः हिन्दीं ज्ञातुं प्रभवन्ति, न तथा आंगलीम् । दशवत्सरपर्यन्तं आंग्लभाषामधीत्य कथंचित् बी. ए. परीक्षायामुत्तीर्णा अपि अनेके नवीनविद्यावन्तः तस्यां भाषायां दशवाक्यानि निर्दोषं लिखितुं न शक्नुवन्तीति वयं जानीमः । एवं च

संस्कृतभाषासम्बन्धवशात् आंग्लभाषाऽपेक्षया हिन्दी सर्वेषामपि भारतीयानां नितरां सन्निहितेति कृत्वा राज्यांगानुसारेण सैव अधिकारस्थानमलङ्करोतु ।

अपि च आंग्लभाषा अस्मद्देशे एतदवधि प्रान्तीयभाषाणामभिवृद्धिं निरुरोध । हिन्दी तु गैर्वाणवाणीसम्बन्धेन इतरप्रान्तीयभाषाभिः सम्यक् मिलिता सती तदभिवृद्धेरेव कारणतां गमिष्यतीति वक्तुं शक्यम् । किञ्च यास्मिन् राष्ट्रे या मातृभाषा, तस्मिंस्तथैव भाषयाऽधिकारः स्वीकार्यः । आंग्लभाषा च सत्वरं निष्कासयितव्या । एवं कृते तत्तद्राष्ट्रे तस्याः तस्या मातृभाषायाः समीचीनं पोषणं स्यादेव हि ।

अथ केचिदेवं वदन्ति—आंग्लभाषा अन्तर्जातीयभाषा खलु । सा विज्ञानशास्त्राभ्यसनं च तद्द्वारा सुलभम् । तस्मात्सैवास्माकं राजभाषा भवतु इति । अत्रेदं वक्तव्यं भवति । अस्तु नाम आंग्ली अन्तर्जातीयभाषा । न वयं सर्वात्मना तां भाषां अस्मद्देशाद्दूरीकुर्मः । एकतः तदभ्यासस्यापि अत्र अवकाशः स्यादेव । ये तावत् विदेशं गत्वा विज्ञानशास्त्राभ्यासं चिकीर्षन्ति, तैरांग्लभाषाऽपि अभ्यस्यतां नाम । किं भारतीयाः सर्वेऽपि स्त्रीपुरुषा विदेशान् गच्छन्ति? न खलु । तस्मात्सर्वैरपि जनैः सा भाषा अवश्यं पठनीया, सर्वोत्तमस्थाने च स्थापनीया भवितु नार्हति ।

अत्रापरः कश्चन मुख्योंऽशः प्रतिपाद्यः अवशिष्यते । यदि हिन्दीप्रदेशस्थानामधिकः अधिकारावकाशः, तद्द्वारा तेषामधिकं सौकर्यं तदितरेषां तु तादृशसौकार्याभावश्चेति भेदो जायत इति कृत्वा, संस्कृतमेव राजभाषात्वेनांगीकार्यमित्यपि केचित् यथार्थवादिनः प्रवदन्ति । तत्सत्यम् । यस्यां भाषायां वेदशास्त्रपुराणादिकं समस्तमपि भारतीयं वाङ्मयं विराजते, यया भाषया प्राचीनकाले विशालेऽस्मिन्भरतखण्डे सर्वत्रापि राजकार्याणि निर्व्यूढानि, या भाषा सर्वासामपि भारतीयभाषाणां मातृभूता, यां भाषां विदेशीया अपि बुधा बहुधा स्तुवन्ति स्म, या भाषा भारतीयसंस्कृतेः प्रतिबिम्बभूता, इदानीन्तनेऽपि काले भारतीयजनेष्वैकमत्यं यां भाषामाधारीकृत्यैव प्रवर्तते, सा चेद्गीर्वाणभाषा राजभाषाभवति; किं ततोऽप्यस्माकं मुदावहः विषयः अपरः स्यात्? परन्तु तादृशं पुण्यमस्माभिः अनुष्ठितं वेति संशयः ॥

# जननीजन्मभूमिश्च स्वर्गादपि गरीयसी

## ( यन्. शठकोपः )

लोके सर्वैरपि प्राणिभिः एकान्तमभिलषणीयं वस्तु सुखमेव। तच्च सुखं स्वर्गे लोके एव लभ्यते। अतः सर्वेऽपि मानवाः स्वर्गप्राप्त्यर्थमेव बहुधा प्रयतमानाः दृश्यन्ते इत्यतः स्वर्गो लोकः सर्वापेक्षया गरीयान् इति निश्चप्रचम्। विचार्यमाणे तदपेक्षयापि अत्यन्तं श्रेष्ठं वस्तुद्वयं जगति जगर्ति, तदेव जननी जन्मभूमिश्च।

न हि जगति जनिमतां विद्यते अपरं प्रियतमम् ऋते जनयित्र्याः। या किल नवजातस्य शिशोः अवलोक्य मुखं एकपदे विस्मरति स्वीयां दुर्भरां प्रसव-वेदनां, नवमासपर्यन्तं गर्भभारजनितं दुःखं च।

न केवलं जन्मदानमेव करोति शिशूनां जननी, अपि तु आजन्मनः तेषां मलमूत्रेभ्योऽपि अजुगुप्समाना पक्ष्मेव लोचनं लालयन्ती पालयन्ती तान् पौरान् निर्माति। अत एव "मात्रा समं नास्ति शरीरपोषणे" इत्युच्यते।

यद्यपि पितापि शिशूनां जन्महेतुर्भवति तथापि जातानां तेषां लालने पालने च मातुः यावान् भारः न तावान् पितुः। किञ्च माता शिशूनाम् आरोग्यार्थं स्वयम् आत्मानं पथ्यं लम्भयति। अरुचितमपि हितमाहारं भुङ्क्ते। योगीव इन्द्रियचापलं त्यक्त्वा अरुणापि पथ्यमेव आहारमुपयुङ्क्ते। अन्यथा स्वेच्छाहारविहारदूषितशरीरायास्तस्याः स्तन्यं शिशूनां क्षुन्निवृत्त्या साकं रुजमपि उत्पादयेत। अपि च शिशूनां विषये मातुर्विद्यमानं वात्सल्यं नैसर्गिकम् अव्याजं च।

न केवलं मानवजातेरेव अयं पन्थाः, अपितु तिर्यञ्चोऽपि स्वस्वापत्य-पालने यादृशीं विधिमत्तां गृह्णन्ति परिशीलनेन विज्ञायते। अवलोक्यतां तावत् गवां वत्सेषु कीदृशः प्रेमा इति। तदुद्दिश्यैव वात्सल्यशब्दः अपत्यस्नेहार्थे रूढः इव। न हि तेषु ईषदपि विद्यते प्रत्युपकाराशा गवाम्। [ क्रमशः ]



# व्यासवाल्मीकिसंवादः



महाविद्वान्
श्री कांची प्र० भ० अण्णङ्गराचार्यस्वामी



( पूर्वानुबन्धः )
— व्यासवाक्यशेषः —

एवं नाम आर्द्रहृदयो राघवो रावणमेकेनैव सायकेन क्षणात् अनिघ्नन् व्यलम्बतेति यत् न तत् शौर्यवीर्यपराक्रमन्यूनतया, अपितु प्रत्याशाविशेषादेवेति संसिद्धम् - इति खलु भवतो विवक्षितम्। सत्यं सुसमञ्जसमेतत्। अहमतीव प्रसन्नहृदयोऽस्मि। भगवन् वाल्मीके महर्षे! अथान्यं कमपि विषयमुदञ्चये। भगवान् रामचन्द्रः सत्यवादीति सुप्रसिद्धमेतत्; स एव खलु स्वयमाह "रामो द्विर्नाभिभाषते" इति। न तत्र मे काऽपि जिज्ञासा वर्तते। सत्यवादित्वमन्यत् युक्तवादित्वमन्यत्। सत्यवादिनो जना युक्तवादिनोऽपि भवन्तीति न निर्बन्धः। रामः सत्यवादी सन्नपि युक्तवादी न भवतीति केचिद्विप्रतिपद्यन्ते। अत्र भवान् समाधत्ताम्।

**वाल्मीकिः** – भगवन्! रामचन्द्रो युक्तवादी न भवतीति विप्रतिपत्तिः केषाञ्चिदस्तीति इदम्प्रथमतयैव मया श्रूयते। तस्य कीदृशीमुक्तिमवलम्ब्य सैषा विप्रतिपत्तिरुदैदिति प्रथमतो ज्ञापयितुमर्हति तत्रभवान्। तद्विदित्वैव हि मया समाधातुं शक्यम्। एतावत्तु सुदृढं ब्रवीमि रामचन्द्रे अयुक्तवादित्वशङ्कायाः प्रसक्तिगन्धोऽपि नास्त्येवेति।

**व्यासः** – एवं द्रढीयसी प्रतिपत्तिर्ममापि वर्तत एव ननु भगवन्! विचारास्पदं विषयं तु वच्मि। दशरथेन राज्ञा यदा रामस्य यौवराज्याभिषेक-

निर्णयः कृतः, प्रकाशितश्च स रामसविधे, तदा स रामः सौमित्रिं प्रति प्रब्रवीति "लक्ष्मणेमां मया सार्धं प्रशाधि त्वं वसुन्धराम्। द्वितीयं मेऽन्तरात्मानं त्वामियं श्रीरुपस्थिता ॥ सौमित्रे! भुङ्क्ष्व भोगांस्त्वमिष्टान् राज्यफलानि च। जीवितं च हि राज्यं च त्वदर्थमभिकामये" ॥ इति। तदेतत्कथनमयुक्तमिति भाति। उपरि भरतश्चित्रकूटमागतो यदा भृशमर्थयते रामं राज्यस्वीकारं प्रति, तदा रामचन्द्रो भरतमुद्दिश्यैवमाह "पुरा भ्रातः! पिता नस्स मातरं ते समुद्वहन्। मातामहे समाश्रौषीद्राज्यशुल्कमनुत्तमम्" ॥ इति। अनेन वचसा किं प्रतीयते? राज्याभिषेको भरतस्यैव न्याय्य इति रामस्य हार्दी प्रतिपत्तिरिति प्रतीयते। एवंविधप्रतिपत्ति-शालिना रामेण यौवराज्याभिषेकप्रस्तावसमये युधाजिन्नगरात्सद्यो भरतस्यानयन-मादेष्टव्यमिति दशरथसविधे प्रार्थनया कृतया भवितव्यम्। "मातामहे समाश्रौ-षी"दिति रामेण भरतसविधे कथितं यत् तत्किमहो तेन तदानीमेव विज्ञातम्? चिरादेव हि तस्येदं मनसि विराजते। ऋजुबुद्धिना रामेण पुरस्तात् दशरथ-सकाश एव तदेतत्कथयितव्यम्। तदेव हि युक्तं स्यात्। तद्विप्रतीपतया सौमित्रिसकाशे यदुक्तम् "लक्ष्मणेमां मया सार्धं प्रशाधि त्वं वसुन्धरा"मिति तत्तु सुतरामयुक्तम्। किमत्र प्रतिपद्यते तत्र भवान्।

वाल्मीकिः — कृपया श्रोतव्यमवहितेन मनसा। रामः खलु दीर्घदर्शी। भरत एव राज्यार्ह इति तस्य हार्दप्रतिपत्तौ न किमपि वैकल्यम्। राज्याभिषेकं प्रस्तुतवतो दशरथस्य सविधे भरतानयनप्रार्थनाप्रपञ्चनमेव समुचितमिति रामस्य प्रतिपत्तौ च न काऽपि न्यूनता। अथापि तु तत्प्रस्तावलेशोऽपि न कृतस्सत्यं रामेण। किमत्र कारणमिति सुनिपुणमालोचनमावश्यकमन्तर्वाणिवराणाम्। दशरथ-स्तानि तानि वाक्यानि रामसविधे कथयन् इदमप्येकमचकथत् — "विप्रोषितश्च भरतो यावदेव पुरादितः। तावदेवाभिषेकस्ते प्राप्तकालो मतो मम ॥ कामं खलु सतां वृत्ते भ्राता ते भरतः स्थितः। ज्येष्ठानुवर्ती धर्मात्मा सानुक्रोशो जितेन्द्रियः। किं तु चित्तं मनुष्याणामनित्यमिति मे मतिः" ॥ इत्यादि। भरतभक्तियाथात्म्य-वेदिना रामचन्द्रेण तदिदं दशरथवचनमवश्यमेव सद्यः प्रत्याख्येयम्। "राज्यं चाहं च रामस्ये"ति सुदृढाध्यवसायशालिनो भरतस्य प्रकृतिं दशरथादप्यधिकमव-गच्छति यतो रामचन्द्रः, ततश्च स चक्रवर्तिसविधे भरतप्रशंसनमतितरामेव कर्तुमर्हति। "तात! महात्मन्! भरतो नैवमाशङ्कनीयः कदाऽपि। मत्प्रेमैक-निरूपणीयस्स न कथञ्चिदपि विपरीतवृत्तो भविता। शुभनिमित्तेऽस्मिन्, सोऽपि

भरतस्सहावतिष्ठताम् । आनीयतां च सत्वरं सः" इति सनिर्बन्धमेव कथयितुमर्हति च । परं तु न किमप्यवोचत । अप्रतिषिद्धमनुमतं भवतीति न्यायेन भरते दशरथप्रकटितमवद्यं रामः स्वयमनुमतवानित्यपि वक्तुमवकाशो घटते । कथमिव विषेहे रामचन्द्रो भरते ईदृशावद्यप्रसङ्गमिति विमर्शे गाढं विरचिते, इदमेव सुष्टु निष्पद्यते -- भरतस्समुपस्थितश्चेत् अथ कैकेयीवरप्रार्थनादिकमपि सर्वथा सद्य एव मोघं भविष्यति । "न मन्थराया न च मातुरस्या दोषो न राज्ञो न च राघवस्य । मत्पापमेवात्र निमित्तमासीद्वनप्रवेशो रघुनन्दनस्य" ॥ इति परस्तात्कथयिष्यतो भरतस्य द्रढीयांसमध्यवसायमवजग्मिवान् रामः सुदृढं प्रतिपेदे–'भरतस्यागमने सति स नैव मनागप्यभ्युपैष्यति स्वस्याभिषेकम्; ममैवाभिषेको निष्प्रत्यूहं निष्पादितस्स्यात; महर्षिसंसेवनपुण्यतीर्थाटनादिहेवाकिनो मम वनवासरुचिर्विघटेतैव । अतो भरतानयनप्रसंगमात्रमपि नेदानीमुचितम्' इति । अत एव रामो दशरथोक्तिषु प्रतिषेधलेशमपि न प्राचीकशत् । अत एव च तस्य मनोरथः (वनयात्राविषयकः) सुष्टु सम्पन्नः । तथा च "लक्ष्मणेमां मया सार्धं प्रशाधि त्वं वसुन्धरामिति सुयुक्तमेवाभिहितं तेनेति प्रतिपत्तुं युक्तम् ॥

**व्यासः** – भगवन् प्राचेतस महर्षे! सुचारुतरा समाहितिरेषा । अत्यन्तगाढविमर्शेनैव प्रतिपत्तुं शक्यमेतत् । मितमतयो जना एवं नाम गाढं विमृश्य तत्वं प्रतिपत्तुमशक्ता विप्रतिपत्तिं विस्तृण्वते । अस्तु । अन्यदिदमनुयुज्यते; यदा भरतो भरद्वाजाश्रमसंनिकर्षे सपरिवारस्समायाति, तदा रामचन्द्रश्चित्रकूटे तत्रत्यनानाविधरामणीयकप्रदर्शनपुरस्सरं सीतया सह सरससल्लापमाकलयन्निदमाह "यदीह शरदोऽनेकास्त्वया सार्धमनिन्दिते! लक्ष्मणेन च वत्स्यामि न मां शोकः प्रधक्ष्यति" ॥ इति । अत्र 'न मां शोकः प्रधक्ष्यती'ति शोकपदेन विवक्षितः खेदः को नाम? राज्याभिषेकप्रहाणजं नगरपरित्यागजं च दुःखमेव खलु विवक्षणीयम् । एवमेव खलु व्याचक्षते व्याख्यातारोऽपि । एतेन नगरत्यागः स्वस्य दुःखावह इति रामचन्द्रः स्ववाचा स्वयमेव प्राचीकशदिति हि प्रतीयते । अपि नामेदमुपपद्यते? "वनवासो महोदय" इति स्ववाचा विरुध्यते खल्वेतत् । रामस्य वनवासाभिरुचिर्न हार्दी व्यराजतेति निश्चेतव्यं खलु भवत्येतेन इति केचिद्विप्रतिपद्यन्ते । अत्र समाहितिरेव प्राधान्यमश्नुते ।

**वाल्मीकिः** – सत्यमेतत्; सुष्ठु विज्ञापये। "न मां शोकः प्रधक्ष्यती"त्यत्र नगरत्यागजं दुःखमेव शोकशब्दविवक्षितमिति प्रतिपत्तिर्नैव साधीयसी। तथा व्याख्यानमस्ति चेद्विगेयमेव तत्। प्राप्तव्यं राज्यं न प्राप्तमिति हेतुना वा, राजधानीवासः प्रभ्रष्टो हन्तेति हेतुना वा रामप्रभोः शोको नैव प्रसक्तः। माता-पित्रोः परिचर्याकरणादिभाग्यप्रच्युतिनिबन्धनः शोको ह्यवर्जनीयः। तथाविधः शोकोऽपि रामस्य नैवासीदिति हन्त केन वक्तुं शक्यते? साकेतनगरनिवासानेहसि मातापितृवरिवस्यनादिना संतोषः संभवेदेव हि चेतसि रामस्य। वनवासकाले यदा यदा तत्तादृशसंतोषस्य स्मरणमुपजायते तदातदा तत्प्रच्युतिप्रयुक्तः खेदोऽपि हृदयमभिभवेन्ननु। तादृशं शोकं कथमिव निह्नुवीत रामचन्द्रः? नैतत्संभावनार्हम्। तथाच "यदीह शरदोऽनेकास्त्वया सार्धमनिन्दिते!। लक्ष्मणेन च वत्स्यामि न मां शोकः प्रधक्ष्यती"त्युक्तं नायुक्तमिति प्रतिपत्तव्यम्।

**व्यासः** – साधीयस्येव सेयं समाहितिः। परं तु स्थूणानिखननन्यायेन समाहितेरस्या द्रढिम्ने प्रकृतविषयकं चोद्यं पुनरपि विपुलमुपक्षिपामि तावत्। तपोवनं जिगमिषता दशरथेन रामस्य यौवराज्येऽभिषेचनं निश्चितवता रामाय तदिदमावेदितवता च कैकेयीवचनवागुरावशंवदेन रामस्य वनप्रस्थापनमकारि। तदात्वे रामस्य हृदयं खेदविवशं स्याद्वा? मोदविवशं स्याद्वेति प्रामाणिकैः परामर्शनीयम्। मकुटाभिषेकसन्नाहसंभृतस्य तस्य जटावल्कलादिधारणपूर्वकं कन्दमूलादिखादनेन चतुर्दशवर्षावधि घोरतरेषु काननोद्देशेषु शरारुमृगगणप्रचुरेषु क्रूरकर्मराक्षसबृन्दनिषेवितेषु संचरणं नाम स्मरणमात्रेऽपि अहह! अतिमात्रखेदसंपादकमित्यत्र कस्संदेहः? रामस्तु स्ववाचा खेदगन्धविरहं मोदातिशयसमारोहं च संगिरते [अयो २२–२९] "मा च लक्ष्मण संतापं कार्षीर्लक्ष्म्या विपर्यये। राज्यं वा वनवासो वा वनवासो महोदयः"॥ इति तावद्दाशरथेर्भाषितं वनवासप्रस्तावे। राज्याभिषेकापेक्षया वनवासो महानन्दहेतुरिति कथयन् रामचन्द्रः सहृदयमेव खल्वेवमाह। अथ पञ्चवट्यां सीताविश्लेषे संप्राप्ते उच्चावचाः प्रलापास्संभवन्ति रामस्य। [आरण्य ६७–२५] "राज्याद्भ्रंशो वने वासो नष्टा सीता हतो द्विजः। ईदृशीयं ममालक्ष्मीः निर्दहेदपि पावकम्"॥ इति तावदुच्चैराक्रोशति जानकीजानिः। आः! किमेतस्य श्लोकस्यार्थो विवरणसापेक्षः।

[क्रमशः]

# अष्टग्रहसंयोगफलं चतुर्दशवार्षिकम्

[ रचयिता - सरसकविराजः माहाकविः व. रामानुजाचार्यः ]



श्रीमति मद्रपुरे रमेशमहेशनामानौ सर्वविद्यालयमाणवकौ विंशतिवयस्कौ प्रियसुहृदाववसताम् । तयोः रमेशः सर्वशास्त्रेषु महाविश्वासी । महेशस्तु ज्योतिश्शास्त्रमात्रे अविश्वस्तः । कदाचित् उभावपि स्वस्वकार्यार्थं त्रिशीर्षपुरं गन्तु धूमशकटं अध्यारूरुहतुः । एतदारूढपेटिकायां कश्चित् पुरुषः पुरत उपविष्टः । अमीषां परस्परं लोकाभिरामसल्लापः समजनि तदा एवं —

पुरुषः – बहवो जनाः इदानीं लोके "इदं पुण्यक्षेत्रं, अत्र महोत्सवः, अद्य सेतुस्नानविशेषः, तत एतत" इत्यादि बहुधा वदन्तः वृथा अर्थव्ययं कुर्वन्तः विनष्टाः अकालमृत्युं विन्दन्ति । पश्यन्तु तावत् धनुष्कोटिविपदम् ।

महेशः – तथा भवन्तो न वदन्तु । रामेश्वरदर्शनसेतुस्नानार्थमागताः केचिदेव हि । तद्द्वीपस्थजनधन गृहगोधूमयानस्थानतन्मार्गादि सर्वमपि हि द्वीपेन सहैव अभक्षयद् भगवान् समुद्रराजः ।

रमेशः – (पुरुषं वीक्ष्य) तथा न वक्तव्यं भवद्भिः । सर्वं हि दैवायत्तं । अन्यस्थलेषु झंझामारुतेन धूमशकटपतनादिभिः खलु धनजनादयो बहवो नष्टाः । दैवं विना अणुरपि न चलेत् ।

पुरुषः – दैवं दैवमिति जनाः वदन्ति । तदस्ति यदि एतादृशविपदादयः निवारणीयाः खलु ।

महेशः – क्वचित् क्वचित् तथा निवारितं । यदि जनाः दैवविश्वासिनः तत्पूजादिकर्माण्याचरेयुः तत्सुप्रीतं रक्षेदेव ।

रमेशः – द्विवर्षात्पूर्वंजष्ल्वमकरमासे एकविंशतितमदिनप्रभृति यावद्दिनत्रयं मकरराशौ अष्टग्रहसंयोगः जातः खलु। तदरिष्टफलानि देशस्य संभवन्ति।

महेशः – ज्योतिषे न विश्वासः कार्यः। ज्योषिकः 'इदानीमेतद्भवेत, अनन्तरमेतत भविष्यति' इति वदति। तत् अन्यथा संभवति।

रमेशः – सखे, न तथा वक्तव्यं। शास्त्रं न मिथ्या। ज्योतिर्षिकैः विमृश्य सत्यमुक्तं यदि तथा संभवेदेव। धनादिलोलुपाः सत्यं नवदन्ति।

महेशः – तच्छान्त्यर्थं लोके बहुस्थलेषु यागार्चनाभिषेकादीनन्वाचरन्तु जनाः। तत्फलानि तु व्यत्यासेनैव भवन्ति। अत उक्तं न विश्वास्य इति।

पुरुषः – तदष्टग्रहसंयोगसमयमुद्दिश्य अस्मद्भारतपूर्वप्रधानमन्त्रिणा एवमुक्तं "देशे मूढजनाः बहुस्थलेषु ग्रहशान्त्यर्थमिति क्षामाभिभूतिसमये अद्य आज्यादिवस्तूनि वृथैव अग्नौ प्रक्षिपन्ति। देवमूर्तीनां अभिषेकार्चनादींश्च कुर्वन्ति। पश्यन्तु तावत अहं तत्समये उपरि आकाशे बहुदूरे तद्ग्रहाणां समीपे व्योमविमाने समचरम्। तत्संयोगः किमकरोन्माम्? सुखेन आगतः," इति। अतः एतत्सर्वमपि व्यर्थमेव खलु।

रमेशः – (उभौ वीक्ष्य)भवन्तः तथा न ब्रुवन्तु। एतत्संयोगजारिष्टः चतुर्दशवर्षावधिकः। अतः एतदरिष्टनिवृत्यर्थं शान्तिकर्तृजनानां राजांगे यदि आर्थिकसहायः कृतः तदा जनकृतशान्तिहोमादिप्रीताः देवाः आगमिष्यदरिष्टानि शामयेयुः। अकिञ्चनजनैः पूर्वकृतहोमादिभिरेव सिन्धुसीमोल्लंघनादिभिः द्राविड़दक्षिणैकदेशा एव नष्टास्संजाताः। यदि जनाः अत्यक्तहोमादिकाः एतदपि न संभवेत। भूवतु, चतुरधिकगुणितः खलु भगवान् सिन्धुराजः। अरिष्टकाल एव एतादृशसंयोगः संभवति। पूर्वं श्रीरामपाण्डवानां वनवासप्रयाणादिसमये एतद्वत् अष्टग्रहसंयोगो जात इति श्रीमद्रामायणभारतादिषूक्तः।

महेशः – श्रीमद्रामायणे चतुर्दशाब्दावधिकः, सत्यं। भारते कथम्?

रमेशः – वनवासे द्वादश, अज्ञातवासे एकः, पूर्वापरसंयोगेन एकः इति ज्ञायते। सखे पश्य, श्रीमद्रामायणे मृतो दशरथः, अत्र जनाधियतिः राजेन्द्रप्रसादः। चीनायुद्धारंभः, ग्रहसंयोगारिष्टे अविश्वासी पूर्वप्रधानमन्त्र्येव अद्य मृतः। अरिष्टानि जायन्ते। अत्र चीनेन महायुद्धसन्नाहकरणम् श्रीरामायण-भारतयोः अन्ते रामरावणकौरवपाण्डवयुद्धौ।

महेशः – श्रीरामायणभारतयोः भरतकौरवराज्ययोः, वने श्रीरामपाण्डवानां च किमरिष्टं संज्ञातमित्युच्यते?

रमेशः – भरतराज्ये दानधर्मादिकरणात् भरतेन 'स पादुकाभ्यां प्रथमं निवेद्य' इति श्रीरामपादुकायाम् रामागमनपर्यन्तं शरणागतिकरणात् नारिष्टं जातम्। वने विराधजनस्थानवधमारीचवधसीताहरणादि च। कौरवराज्ये गन्धर्वैः दुर्योधनहराणाद्यरिष्टानि, वने किंमीरहिडिंबबकादिवधः।

पुरुषः – कथं लोकविषयसल्लापमध्ये पुराणकथाप्रवृत्तौ!

रमेशः – प्रासंगिकस्संवृत्तः। तदस्तु। अद्यगतान्यरिष्टानि गतान्येव। इतः परं वा जनाः शान्तिहोमादिसत्कर्माणि यदि कुर्युः एतादृशारिष्टानि न संभवेयु-रेवेति मन्ये।

पुरुषः – आगमिष्यदागामिष्यदेव किमेभिर्व्यर्थकृत्यैः? (बहिर्निरीक्ष्य ससंभ्रमम्) तत्सर्वमस्तु। भवन्तः कुतत्याः किन्नामानः कुत्र च गच्छन्ति? सल्लापप्रसंगे एतत् विस्मृतम्।

रमेशः – अहं रमेशः, अयं महेशः मद्रमयूरपुरवास्तव्यौ त्रिशीर्षपुरं गच्छावः। भवन्तः?

पुरुषः – अहं उमेशः मद्रकलाविभागकार्यदर्शी धनुःपुरीयः तत्र गच्छामि वेंक-टेशभक्तः। नास्तिकवत् वादः कृतः। तत् क्षन्तव्यम्। आगतं धनुःपुरं। गच्छामि पुनर्दर्शनाय।

उभौ – अधिकारस्थाने भवन्तं पश्यावः इतः परम्।

उमेशः – तथा। न विस्मर्तव्यं। धूमशकटसुहृदिति न मन्तव्यम्। साधयामि (इति स्वपेटिकया अवरोहति)।



# सुलभपाठमाला १३

## सर्वनामशब्दाः ( एतच्छब्दः )

एषः एकः बालः। एते बालाः गच्छन्ति। एषा एका बालिका गायति। एताः बालिकाः गीतं गायन्ति। एतत् फलं मधुरं भवति। एतानि फलानि सुन्दराणि भवन्ति। एतं बालं आह्वय। एतान् वटून् आनय। एतां वनितां पश्य। एताः वनिताः पूजय। एतत् फलं गृहाण। एतानि फलानि गृहाण। एतेन बालेन किं पठितम्? एतेन फलेन किं प्रयोजनम्? एतैः बालैः सह गच्छ। एतैः फलैः किं साध्यम्? एतया वनितया सह आगच्छ। एताभिः वनिताभिः सह तिष्ठ। एतस्मै बालाय किं दातव्यम्? एतस्मै फलाय मूल्यं कियत्? एतस्यै बालिकायै किं रोचते? एताभ्यः बालिकाभ्यः किं अपेक्षितम्? एतस्माद् पुरुषात् अयं स्थूलः। एतस्मात् फलात् एतत् फलं स्थूलम्। एतेभ्यः मनुष्येभ्यः एषः वीरः। एतेभ्यः फलेभ्यः एतत् मधुरम्। एतस्याः वनितायाः एषा सुन्दरी। एताभ्यः एषा गुणवती। एतस्य जनस्य फलस्य वा गुणः कीदृशः? एतेषां जनानां फलानां वा गुणाः कीदृशाः? एतस्याः लतायाः पत्राणि रम्याणि। एतासां रूपं रमणीयम्। एतस्मिन् मनुजे पत्रे वा प्रीतिः मम नास्ति। एतेषु मनुजेषु पुस्तकेषु वा मम प्रीतिः अधिका। एतस्यां परीक्षायां कति उत्तीर्णाः? एतासु लतासु पुष्पाणि भवन्ति। एतौ बालौ। एतौ बालौ आनय। एते द्वे फले। एते फले भक्षय। एताभ्यां किंप्रयोजनम्? एतयोः कः रुचिरः? एते द्वे बालिके। एते बालिके आह्वय। एताभ्यां बालिकाभ्यां किं कृतम्? एतयोः बालिकयोः का सुन्दरी?

**अवधेयम्** — पुन्नपुंसकलिङ्गयोः प्रथमाद्वितीयाविभक्तयोरेव भेदः, अन्यत्र समानरूपता। प्रथमाद्वितीयाद्विवचने स्त्रीनपुंसकलिङ्गयोः समानरूपता। तृतीयादिविभक्तिषु द्विवचने लिंगत्रयस्यापि समानरूपता।

केचनैव महानुभावाः स्वच्छन्दं स्वच्छन्दं प्रेषितवन्तः । तेषां शुभनामानि अधः दीयन्ते । अन्यानपि प्रार्थये स्वकं अवलम्बमपि प्रदातुम् । ति. कं. ति.

## Names of Subscribers for Gairrvani 1965

(Continuation)

| | | | |
|---|---|---|---|
| 77. | G. Nagabhushanam, Pandit Peeleru. | 4 | 00 |
| 78. | A. Sreenivasulu, Khammam. | 4 | 50 |
| 79. | B. Narasimhacharya, M Uppalapadu. | 4 | 00 |
| 80. | Sri Nityanandagiriswami, Kailasasramam. | 5 | 00 |
| 81. | Sri Vasudevanandaswamy, Palliput. | 5 | 00 |

अद्ययावत् एतावन्त एव सदस्याः ।

अतः एकैकोपि पाठको दयतां अस्यां गैर्वाण्याम् ।



श्री विमलानन्दस्वामिनः शुभागमनसमये

**श्री यन्॰ रामनाथ अय्यर् महोदयैः सभायै**

रू. २००

प्रदत्तानीति प्रकाशयितुमानन्दनिर्भराः स्मः ।

ति. कं. ति.

प्रधानमन्त्री.



R. N. 8145/60. Postal R. No. H. 493.

वार्षिकम् रु. ४ - ००

# प्रहेलिका:

लेखकः — वैद्यः एकस्वरूपशास्त्री,
संपादकः, बालसंस्कृतम्, मुंबापुरी.

द्वे भ्रातृणी ते सहजे सुशीले
तवोत्तमाङ्गे वसतः सदैव ।
प्रायो न यातस्तव गोचरेषु
जानासि चेन्नाम तयोर्वद त्वम् ॥

(नेत्रे)

पुरेऽपि ग्रामेऽपि च पत्तनेऽपि
भव्येन रूपेण विराज़मानम् ।
मृदिष्टकाप्रस्तरजातजन्म
वदन्तु चेद्दं किमहं जना माम् ॥

(भवनम्)

मध्येन वर्णेन विनास्मि भूतिः
आद्येन वर्णेन विना पतिश्च ।
अन्त्येन वर्णेन विनाऽस्मि भूपः
वदन्तु छात्राः मम नामधेयम् ॥

(भूपतिः)



Published by Sri N. Ramanatha Iyer, B. A., B. L., Advocate & Secretary, S. B. P. Sabha, Chittoor (A. P.)

Printed by Sri T. K. Thiruvengadacharya, at Vijaya Press, Chittoor (A. P.) C. 1000.